- Title – अज्ञात
- Accession No – Title –
- Accession No –
- Folio No/ Pages – 2|4 7-8 उपलब्ध
- Lines-
- Size
- Substance Paper –
- Script Devanagari देवनागरी
- Language – संस्कृत
- Period –
- Beginning – ~~[illegible]~~ प्रविभूतिमुक्तः ॥15, सदाऽरक्तोऽग्नि सुरक्रियायां धातुक्रियायां
- End – निजान्वये वैमनुजोनरेन्द्रस्त्वेन्द्रो ।
- Colophon-
- Illustrations -
- Source -
- Subject - ज्योतिष
- Revisor -
- Author -

1. Remarks- अपूर्ण, 1-6 अनुपलब्ध

Suman

त्रविभूतियुक्तः १५ सद्भानुरूक्षेशिनिसुरक्रियायांधानुक्रियायामपिचोग्रसौम्यः यस्यप्रसूतौचभवेद्दिशावासरवानकस्या
पिभवेन्मनुष्यः १६ सत्क्रांतिकीर्त्तिश्रसदोत्सवः स्याज्जेतारिपूणांचकलाप्रवीणः स्यात्संभवेयस्यकिलानराणांसंप
द्विवाधाविविधावतस्य १७ सत्क्रांतिकीर्त्तिर्हिमुनासमेनोचिन्नाह्विनोत्पंतनसन्ततापः श्रेष्ठप्रतिशोवदतीवरिष्ठोजन्ये
शोद्भवः स्यान्नरूपोविशेषात् १८ अथमूलविचारः मूलंविरूद्धावयवंसमूलंकुलंनिहन्त्येववदंतिसंतः चेदन्यथा।
सत्कुरुतेविशेषात्सौभाग्यमायुश्चकुलाभिवृद्धिं १९ ज्येष्ठांत्यघटिकावेकामूलादौघटिकाद्वयं अभुक्तमूलमित्युक्तं
नत्रोत्पन्नंत्यजेत्सुखं २० अष्ट वर्षाणिनोनाल्लोकयेन्नैणाअभमिभूता नद्दोषपरिहारार्थंशांतिकंप्रोच्यतेधुना २१
रत्नैः शतौषधीमूलैः सप्तमृद्भिः प्रपूजयेत् शतछिद्रोघटस्तस्मान्निर्गतेनजलेनहि २२ बालकंवापितृस्नानेविवेदैः
संपादितेसति जयहोमप्रदानेन कृतेस्याच्छांगलंध्रुवम् २३ विरूद्धावयवेमूलेविधिरेवंस्मृतोबुधैः मुनीनांवचनं
सत्यमंतव्यंक्षेममोक्षुभिः २४ मूलस्यपादत्रितयेक्रमेणपितुर्जनन्याश्चधनस्यरिष्टं चतुर्थपादः शुभदोनितांतसार्प्पे।
विलोमंपरिकल्पनीयं २५ इतिचरणफलं कृष्णेतृतीयादशमीवलक्षमूतेमहीजार्किबुधैः समेतः वेतस्यका
लेकिलतत्रमूलंमूलनंनेतकुरुतेकुलस्य २६ दिवासायंनिशिप्रातस्तातस्यमातुलस्यच पशूनांमित्रवर्गस्य
क्रमान्मूलमनिष्टदम् इतिमूलफलम् मूर्ध्नि पंचमुखेपंचस्कंधयोर्घटिकाष्टकं गजाभुजयोर्युग्मेहस्तयोर्हृदये ग
ष्टकं २८ अष्टनाभौदिशोगुह्येषट्जान्वोः षट्पादयोः विन्यस्यपुरुषाकारेमूलस्यफलमादिशेत् २९ छत्रलाभः
शिरोदेशेवदनेपितृघातनं स्कंधयोर्बंधनंचैव बाहुयुग्मेत्वकर्मकृत् ३० हस्तौकरः करद्वंद्वे राज्याप्तिर्हृदयेभवे
त् जंघायांभ्रमणंप्रीतिंपादयोर्जीवितात्पता ३१ घटीफलंमूलस्यमुनिपुंगवैः विज्ञेयंविबुधैः सर्वैः सर्पेतद्व



किलप्रोक्तं

ईश्वरो विस्तरं ध्रुवंचप
वनोमनवस्तथा २

ओम् जा० म० ८

विवर्जयेत् ३३ इति पुंनक्षत्राकृतौ मूलाश्लेषाफलम् राक्षसो जातुधानश्च सोमः शुक्रः फणीश्वरः पिता माता यमः
कालो विश्वेदेवा महेश्वरः सर्वाः कुबेरश्च शक्रो मेघो दिवाकरः गंधर्वो यमदेवश्च ब्रह्म विष्णुयमाश्च तथा ३४ षण्मुखो
भृंगरीटी च गौरीनाम्नी सरस्वती प्रजापतिश्च मूलस्य त्रिंशद्ह्येते क्षणनायकाः ३५ विपरीतापुनर्ज्ञेया आश्लेषाजातबा
लके प्रथमे द्वितये षष्ठे चाष्टमे वा दशमे तथा त्रयोविंशे च नवमे कुलक्षयकरः शिशुः ३६ इति मुहूर्त्तफलं वेदाः स
प्तगजाः काष्ठाश्वेदा बाणाश्च षट् शिवाः मूलं स्तंभं त्वचा शाखा पत्रं पुष्पं फलं शिखा ३७ मूलवृक्षविभागेषु मंगलं हि
फले दले अमंगलफलं विद्यात् शेषभागेषु निश्चितं ३८ इति मूलवृक्षफलं पादे मुहूर्त्ते वेलायां वृक्षेषु प्रसूता
कृतौ अनियमश्चभाधिको ऽमाधिकोऽशुभफलम् ४० नाना स्वजन्मभे यस्य प्रसूतिर्जायते यदि तातं वा भ्रातरं ज्ये
ष्ठं स्विसं सा कुरुते ध्रुवं ४१ मूलवच्छांतिकं तत्र विधेयं हि विचक्षणैः भूमिरन्नादि हेमान्नं देयं विप्रेषु भक्तितः ४२
सुखेन नश्च क्रोधनवाहनाद्यः हिंस्रो चलाद्यः स्थिरकर्मकर्त्ता प्रतापितारातिजनो मनुष्यो मूले कृती स्याज्जननेन मन
ष्यः ४३ मृत्सोम्यस्तोयपानान्तरः क्रोधो भोक्ता वंचकश्रिविलासः सुशीलः नूनं संपद्यते तेन स्वर्गाद्वा पूर्वाषाढाजन्म
यस्य पुंसः ४४ दाता दयालुर्विजयी विनीतः सत्कर्मचेता विभुता समेतः कांतासुताढ्यः सुखी नितांतं वैश्वसुवेषः
पूरुषो मनीषी ४५ अतिसुललितकांतिः संमतः सज्जनानां नतु भवति विनीतश्चारुशीलो कीर्तिः सुरूपः द्विजवर
सुरभक्तिः व्यक्तवाग्ज्ञानवःस्या दभिजिति यदि सूतिर्नृपतिः सत्ववंशी ४६ शास्त्रानुरक्तो वसुपुत्रमित्रसत्पा
त्रभक्तिर्विजितारिपक्षः प्राणिपुराणश्रवणप्रवीणः श्रीजन्मकाले श्रवणोहि यस्य ४७ आचारजातादरचारु
शीलो धनाधिशाली बलवान् कृपालुः यस्य प्रसूतौ च भवेद्धनिष्ठा महत्त्वनिष्ठा सहितो नरः स्यात् ४८ शीतभी
रुरतिसाहसी सदा निष्ठुरोऽतिचतुरोऽनरो भवेत् वैरिणामतिविनाशनैनाशेवारकोदुयदि यस्य संभवे ४९ जितो।

रामायनम

द्वियः सर्वकलासु दक्षो जितारिपक्षः सुवृत्तयस्य स्मितं भवेन्मनीषा सुतरामपूर्वा पूर्वायदा भाद्रपदाप्रसूतौ ५० कुलस्य मध्ये
किल भूषणं च नानासुखदेहः शुभकर्मकर्त्ता यस्योत्तराभाद्रपदा च जन्मा धन्यो लभेत्सां च भवे वदान्यः ५१ चारुशीलविभ
वोजितेन्द्रियः सद्गुणानुभवनेकमानुषः मानवो न नु भवेन्महानतीरेवती भवति यस्य जन्मभम् ५२ अथ योगफलम्
एषां त्वत्कांतापूजनमित्राद्विसौख्यं [illegible] स्वान्ते कार्यप्रसंगे चंचद्देहोत्सादने मानसे चेद्विष्कुंभो वै संभवे यस्य जंतोः १
वक्ता स्यपद्रूपसंपन्नियुक्तो दानासक्तो नेमसन्नामनस्त्र ज्ञानानंदः सद्विनोदप्रसंग धर्मे प्रीतिः प्रीतिजन्मा मनुष्यः २
अर्थान्यर्थे सा हसैरन्वितश्च नानास्थानो दानयानप्रवृत्तिः यस्यायुष्मान्संभवे संभवे स्या [illegible] त्स्यादायुष्मान्मानवो मा
नयुक्तः ३ दानी धनी सत्यपरायणः स्यादाचारशीलो बलवान्विवेकी सुभक्ति सौभाग्यविराजमानः सौभाग्यजन्मा
हिमहाभिमानी ४ सत्ववीतिचनरः सदुत्तरश्चारुगौरवयुतश्च सन्मतिः नित्यशोभनविधानतत्परः शोभनो भ
वति शोभनोद्भवः ५ सरोमदेहो गलरुक्परो वा विशालवक्त्रो धिरतीवधूर्तः कलिप्रियो दोषहनुर्मनुष्यः यारवडकस्या
दतिगंडजातः ६ हृष्टः सदा सर्वकलाप्रवीणः सत्साहसोत्साहसमन्वितश्च परोपकारी सुतरां सुकर्मा भवेत्सुकर्मा
परिस्रुते काले ७ प्राक्तो वदान्यः सततं प्रहृष्टः श्रेष्ठः सभायां चपलः सुशीलः नयेन युक्तो विनयेन धत्या धृत्याऽत्यय
स्यनरस्य जन्मः ८ नरोदरिद्रः मय संयुतश्च सत्कर्मभृविद्याविनयातिरिक्तः यस्य प्रसूतौ यदि शूलयोगे शूलव्यथा
तस्य भवेत्कदाचित् ९ धूर्तः सुसत्कर्मपराङ्मुखश्च स्त्रीविशेषात्परदुःखभावः चेत्संभवे यस्य भवेच्च गंडः प्रचं
डकोपः पुरुषः प्रदिष्टः १० सुसंग्रहप्रीतिरतीव दक्षो धनान्वितः स्यात्क्रयविक्रयाभ्यां प्रसूतिकाले यदि यस्य वृद्धि
र्भोग्यावि वृद्धिर्नियमेन तस्य ११ निश्चनादिकमलास दाल ये संभवेच्च वदने सरस्वती चारुकीर्तिरपि दूरगा ध्रुवं

राम. जा.
८

चेद्भुवो भवति यस्य जन्मभं १२ क्रूरोल्पदृष्टिः क्रियया विहीनो महाहनुः स्यादपवादवादी प्रसन्नताप्रीतिरतीव मर्त्यो
ध्याघातजातः खलु घातकर्त्ता १३ सुस्निग्धगात्रः कृतशास्त्रयत्नः सद्गन्धभूषावसनादियुक्तः प्रसूतिकाले यदि हर्षणा
ख्ये समानवो वैष्णिकर्षणः स्यात् १४ सुधीर्गुर्वं धर्मगुणवान्महौजाः सत्यान्वितो रत्नपरीक्षकः स्यात् वज्रं भवेयस्य
च वज्रयोगो स वज्रवत्कांतनमृषणाढ्यः १५ उदारचेताश्च नरः सुशीलः शास्त्रादरः सारविराजमानः प्रसूतिकाले
यदि यस्य सिद्धिर्भोग्या विवृद्धिः सततं हितस्य १६ उदारमूर्तिः पितृमातृवाक्ये गदार्त्तमूर्त्तिः प्रकटोरवाक्यः परस्य का
र्यं व्यतिपातजन्मा नरः खलु स्याद्व्यतिपातजन्मा १७ उत्पन्नभोक्ता विनयोपपन्नो दुर्व्यात्मताख्य यतासमेतः सतत
कर्मसोजन्यतया वरीयान्भवेद्वरीयान्भवेदियस्य १८ असत्यसाक्षीप्रतिभूतचेता हतान्मकर्मादमयासमेतः विहीनः
सत्वोल्पभक्तो विजेतो विपक्षस्य व्याप्रियो वैपरीघोद्भवः स्यात् १९ सन्मंत्रशास्त्राभिरतो नितांतं जितेंद्रियश्चारुश
रीरयष्टिः योगः शिवो यज्जन्म नियस्य जंतोसदाशिवं तस्य शिवप्रसादात् २० जितेंद्रियः सत्यपरोतिगौरः सर्वेषु
कार्येष्वपिकोविदश्च भवेत्प्रसूतौ यदि सिद्धयोगो सिद्धंतिकार्याणि कृतानि तस्य २१ नूनं विनीतश्चतुरः सदा
सः स्वकार्यदक्षो जितशत्रुपक्षः सन्मंत्रविद्याविधिनैव सर्वं संसाधयेत्साध्यभवो मनुष्यः २२ शुभप्रचारः शु
भवाग्विलासः शुभस्य कर्त्ता शुभलक्षणश्च शुभोपदेशं कुरुते नराणां यस्य प्रसूतिः शुभनामयोगे २३ जि
तेंद्रियः सत्यवचा महौजाः वाग्वादिसंग्रामजयाभ्युपेतः सन्मान्यशुक्रांबरधारणेच्छः शुक्लोद्भवो वै भवसंयुतः
स्यात् २४ विद्याभ्यासप्रीतिरत्यंततेजः नित्याचारः सत्कुजातादरश्च शांतो दांतो जायते चारुकर्मा ब्रह्मयोगे संभवे य
स्य पुंसः २५ त्राक्तोवलीयान्विपुलामलश्रीर्यः ऋतुकण्ठा लाहि भवेन्महौजाः निजान्वये वै मनुजो नरेंद्रस्त्वैंद्रो

राम.
८